॥ श्रीनृसिंहाय नमः ॥

# ॥ श्रीनृसिंहस्तुतिः ॥

(श्रीविश्वपतिटीकासहिता)



वामोरुसंस्थेन्दिरयाभिराममुत्तानहस्तोज्ज्वलितारिशंखम् ।
जानुद्वयन्यस्तकरारविन्दं नृसिंहरूपं हरिमानतोऽस्मि ॥ १ ॥
श्रीमन्तं विठ्ठलं नत्वा पूर्णबोधेष्टदैवतम् ।
श्रीनृसिंहस्तुतिव्याख्यां करवाणि यथामति ॥ २ ॥

श्रीमल्लिकुचकुलशेखरश्रीमत्त्रिविक्रमपण्डिताचार्याणामात्मजाः श्रीमन्नारायणपण्डिताचार्याः कदाचिदनन्तशयनादिपुण्यक्षेत्रदिदृक्षया दक्षिणदेशं जग्मुः किल । तत्र केरलीयदेशविदुषो बहुशो वादेन विजिग्युः । तदा तदसहिष्णुभिर्दुर्देवताभजनतन्मन्त्रजपशीलैर्विप्रापसदैरेतेषां मारणेच्छया मारणकर्माकारि । तदरिष्टं रहःकृतं सूक्ष्मेक्षि-

कया ज्ञात्वा सर्वारिष्टानां दुरितमूलत्वात् 'नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये' इत्युक्तेः सर्वारिष्टकारणीभूतदुरितादिनिवृत्तिमात्मात्मीयजनानामन्विच्छन्त इमां नृसिंहस्तुतिं चक्रुरिति सम्प्रदायविदो वर्णयन्ति। श्रीमन्नृसिंहमापादमस्तकं वर्णयन्तो नारायणपण्डिताचार्यास्तं स्तोतुमारभन्ते। प्रलयेत्यादिना—प्रलयः प्रलयकालः तस्य

**प्रलयरविकरालाकाररुक्चक्रवालं विरलयदुरुरोचीरोचिताशान्तराल। प्रतिभयतमकोपात्युत्कटोच्चाट्टहासिन् दह दह नरसिंहासह्यवीर्याहितं मे ॥ १ ॥**

यो रविः सूर्यस्तस्य करालो भयङ्कर आकारो यासां ताः करालाकाराः। 'करालो रौद्रतुङ्गोरुध्वंसतैलेषु दन्तुरे' इति हेमचन्द्रः। करालाकारा या रुचो दीप्तयस्तासां चक्रवालं मण्डलं तत्। 'चक्रवालं तु मण्डलम्' इत्यमरः। विरलयन्ति विरलीकुर्वन्ति तिरस्कुर्वन्तीति विरलयन्ति। तादृशानि यान्युरूण्युत्कृष्टानि यानि रोचींषि तेजांसि तैः रोचितं प्रकाशितम् आशानां दिशामन्तरालं मध्यं येनासौ तथोक्तः तत्सम्बुद्धिः। ॥ १ ॥

विरलयद्दुरुरोचीरोचिताशान्तराल । रोची रोचितेत्यत्र 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः । 'ज्योतींष्यर्केन्दुनक्षत्रज्वलनादीन्यनेकथा । ज्वलन्ति तेजसा यस्य तं ज्वलन्तं नमाम्यहम् ॥' इत्युक्तेः नृसिंहतेजसः प्रलयकालिकसूर्यादितेजसोऽपि नियामकत्वेन ततोऽप्यतिशयितत्वादिति भावः । अतिशयेन भयं भयतमं प्रतिपक्षिणां भयतमं येन सः प्रतिभयतमः । शत्रूणामतिभयङ्कर इत्यर्थः । तादृशः कोपो यस्य स तथा तत्सम्बुद्धिः । प्रतिभयतमकोप । अत्युत्कटोऽतितीव्रः । 'उत्कटस्तीव्रमत्तयोः' इति विश्वः । स चासौ उच्च उच्चस्वरश्चासौ अट्टो महांश्चासौ हासश्च सोऽस्यास्तीति तथोक्तः तत्सम्बुद्धिः । अत्युत्कटोच्चाट्टहासिन् । 'अट्टं भक्ते च शुष्के च क्षौम्येऽत्यर्थे गृहान्तरे' इति विश्वः । प्रतिभयतमश्चासौ कोपश्च तेनात्युत्कटोच्चाट्टहासिन्नित्येकं पदं वा । असह्य

---

उपमानभूतसूर्यरुच्यपेक्षया उपमेयभूतनृसिंहरोचिष आधिक्यवर्णनाद्व्यतिरेकालंकारः । 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।' इति लक्षणात् । अत्र क-ल-र-ह इत्याद्यक्षराणामावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः । अनयोस्तिलतण्डुलवत्संसृष्टिः । अत्र अहितदहनानुकूलः सूर्याधिकप्रकाशत्वशत्रुभयंकरकोपत्वासह्यवीर्यत्वादिवर्णनेन प्रतीत उत्साहो वीररसात्मना परिणतो व्यज्यते ॥ १ ॥

सोढुमशक्यं वीर्यं पराक्रमो यस्य स तथा तत्सम्बुद्धिः । असह्यवीर्य । 'वीर्यं पराक्रमो रेतस्यन्नमाहात्म्ययो'रिति वैजयन्ती । नरश्चासौ सिंहश्च नरसिंहस्तत्सम्बुद्धिः । हे नरसिंह । मे मम । अहितमनिष्टं पापशात्रवादीन् । दह दह भस्मीकुरु भस्मीकुरु । दह भस्मीकरणे प्रार्थनायां लोट् । आभीक्ष्ण्ये द्विरुक्तिः ॥ (सुमतीन्द्रीयटीकायां— अट्टहासिन्नित्यत्र 'एकदेशिनैकाधिकरण' इति ज्ञापकात् 'न कर्मधारयान्मत्वर्थीय' इति

**सरसरभसपादापातभाराभिरावप्रचकितचलसप्तद्वन्द्वलोक-**
**स्तुतस्त्वम् । रिपुरुधिरनिषेकेणैव शोणांघ्रिशालिन् दह दह**
**नरसिंहासह्यवीर्याहितं मे ॥ २ ॥**

वचनं नादृतम् । यद्वा—प्रतिभयतमकोपेनात्युत्कटोच्चं यथा तथाट्टमतिशयेन हसितुं शीलमस्यास्तीत्यर्थे 'सुप्यजातौ णिनिस्तच्छील्ये' ।) ॥ १ ॥ पादवर्णनं करोति ॥ सरसेति—रिपोः शत्रोर्हिरण्यकशिपोर्यद्रुधिरं वक्षोविदारणजं रक्तं तेन निषेकोऽभि-षेकः तेन रिपुरुधिरनिषेकेण । शोणौ रक्तवर्णौ यावंघ्री पादौ ताभ्यां शालते शोभते

तच्छील इति तथोक्तस्तत्सम्बुद्धिः। शोणांघ्रिशालिन्। असह्यवीर्य हे नरसिंह। रसो वीररसः स च रभसो युद्धार्थं गमनवेगः स च ताभ्यां सहितौ सरसरभसौ तादृशौ यौ पादौ तयोर्ये आपाता दैत्यैस्सह युद्धसमये भूम्युद्घातास्ते च। भारश्च। अभि-रावोऽभितो ध्वनिः स च तैः। प्रचकिता अत्यन्तभीता अत एव चलाः कम्पमाना ये सप्तद्वन्द्वलोकाः सप्तानां द्वन्द्वं युग्मं सप्तद्वन्द्वं सप्तद्वन्द्वसंख्याश्च ते लोकाश्च सप्तद्वन्द्वलोका-श्चतुर्दशलोकस्थब्रह्मरुद्रादिदेवा इत्यर्थः। तैः स्तुतः। त्वं मेऽहितं दह दहेत्यन्वयः॥ (सुमतीन्द्रीयटीकायां—निषेकेणेवशोणेति पाठः। निषेकेणेवेति हेतूत्प्रेक्षालङ्कारः। सरसरभसेत्यत्र रसो वीर्यमित्यर्थः। पादापातेत्यत्र आपाताः भूम्यामाघाताः प्रहारा-स्तेषां भारोऽतिशयस्तस्याभिरावस्तज्जनितध्वनिः।) ॥ २ ॥ जङ्घोरू वर्णयति ॥ तव घनेति—घनानां मेघानां घनः समूहः। 'घनः सान्द्रे दृढे चन्द्रे विस्तारे मुद्गरेऽम्बुदे। सङ्घे च' इति हेमचन्द्रः। घनघनवद् घोषो ध्वनिर्यस्य स घनघनघोषः। दैत्येषु ये

---

शत्रुरक्तसम्पर्कादृक्तपादविशिष्टत्ववर्णनेनाहितदहनशक्तिमत्तां नृसिंहस्याभिव्यंजयतीति परिकरालंकारः। 'अलं-कारः परिकरः साभिप्राये विशेषणे।' इति लक्षणात्। चतुर्दशलोकस्थस्तुतत्वात्सर्वोत्तमत्वं नृहरेर्व्यज्यते ॥ २ ॥

जङ्घालाः शीघ्रगामिनः तेषां सङ्घः समूहो दैत्यजङ्घालसङ्घः। 'जङ्घालोऽतिजवस्तुल्या' वित्यमरः। हे असह्यवीर्य नरसिंह। तव घोरं भयङ्करं जङ्घैव जङ्घाप्रदेश एव परिघः परिघाख्यायुधविशेषस्तं जङ्घापरिघम्। लघुस्सूक्ष्मो न भवतीत्यलघुरतिस्थूलस्तम्। ऊरुरिति व्याज ऊरुव्यपदेश इत्यर्थः। तादृशस्तेजोगिरिस्तेजोमयपर्वत ऊरुव्याज-

**तव घनघनघोषो घोरमाघ्राय जंघापरिघमलघुमूरुव्याज-**
**तेजोगिरिं च। घनविघटितमागाद्दैत्यजंघालसंघो दह दह**
**नरसिंहासह्यवीर्याहितं मे ॥ ३ ॥**

तेजोगिरिस्तं च। आघ्राय आघ्राणनं कृत्वा दूरादेव दृष्ट्वेत्यर्थः। घनैर्मेघैर्विघटितो विशेषेण निबिडीकृतस्तम्। आकाशप्रदेशं प्रति। आगात् जगाम। इण् गतौ लुङ्। यथा मृगा व्याघ्रमाघ्राय लतापिहितदेशं प्रति गत्वा भयपारवश्यान्निलीना भवन्ति। तद्वद्दैत्यसङ्घः श्रीनृसिंहस्य स्थूलजङ्घोरु दृष्ट्वा भयवशाद्युद्धभूमिं परित्यज्य घनावृतान्त-

जंघैव परिघ इत्यत्र रूपकालंकारः ॥ ३ ॥

रिक्षप्रदेशे निलीनोऽभूदिति भावः । एतादृशस्त्वं मेऽहितं दह दहेति सम्बन्धः ॥ सुमतीन्द्रीयटीकायां—'प्राणिस्थादातो लजन्यतरस्या'मिति जङ्घाशब्दान्मत्वर्थीये लचि जङ्घावन्तोऽतिवेगिनः । जङ्घा परिघ इव । 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' इत्युपमितसमासः । प्रथमादेः साधारणधर्मस्यानुपादानात् । घोरत्वमुपात्तमपि न साधारणधर्मतया विवक्षितम् । अत एव 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटप्रयोगो गाम्भीर्यस्य साधारणधर्मत्वाविवक्षयैव निर्व्यूढस्तद्व्याख्यातृभिः । यद्वा—जङ्घेव परिघः । 'मयूरव्यंसकादयश्चे'ति समासः । तेजोगिरिः प्रतापदुर्गः । आघ्राय किञ्चिदालोक्य परिघदुर्गयोररिभीषणत्वादियमुक्तिः । घकाराणामसकृदावृत्त्या वृत्त्यनुप्रासः 'वृत्त्यनुप्रास एकस्याप्यावृत्तिरसकृद्यदा । अलघुव्याजतेजोगिरिमित्यत्र कैतवापह्नुतिः 'कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः' इति लक्षणात् ।) ॥ ३ ॥ कटि प्रदेशं वर्णयति ॥ कटकीति—असह्यवीर्य हे नरसिंह । यस्य ते तव । सती च सा कटिस्था कटिप्रदेशस्था च सत्कटिस्था । कटकानि नितम्बप्रदेशा एषां सन्तीति कटकिनः पर्वतास्तेषां कटकानि नितम्बस्थलानि । 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः । तेषु

राजच्छोभमानं यद् हाटकस्य सुवर्णस्य अग्र्यस्थलमुत्तमस्थलं तद्वदाभा कान्तिर्यस्यास्सा कटकिकटकराजद्धाटकाग्र्यस्थलाभा । प्रकटः प्रकाशमानो यः पटः पीताम्बरलक्षणः स एव तटित् विद्युत् प्रकटपटतटित् । कटुकात् कठोरात् कटुकः कठोरः तादृशो दुष्टाटोपो दुष्टसम्भ्रमो येषां दैत्यानां ते तथोक्ताः । 'सम्भ्रमाटोपसंरम्भा' इति यादवः ।

**कटकिकटकराजद्धाटकाग्र्यस्थलाभा प्रकटपटतटित्ते सत्कटिस्थातिपट्वी । कटुककटुकदुष्टाटोपदृष्टिप्रमुष्टौ दह दह नरसिंहासह्यवीर्याहितं मे ॥ ४ ॥**

तेषां दृष्टयो लोचनानि तासां प्रमुष्टिरपहारस्तस्यां कटुककटुकदुष्टाटोपदृष्टिप्रमुष्टौ । अत्यन्तं पट्वी अतिपट्वी अतिसमर्थेत्यर्थः । स त्वं मेऽहितं दह दहेत्यन्वयः ॥ (सुमतीन्द्रीयटीकायां—कटवस्तीक्ष्णाः पदार्थाः 'कुत्सित' इति कप्रत्ययः । अत्यन्तकुत्सितगरादयः तत्सदृशः कटुकः 'प्रकारे गुणवचनस्ये'ति द्विर्वचनं । पट्वी 'वोतो गुणवचना'दिति ङीङ् । यथा तटित्पश्यतां दृष्टिं प्रमुष्णाति तथा पीताम्बरमपि तद्द्रष्टॄणां दैत्यानां

दृष्टिमपहरतीति भावेन पटतटिदिति रूपकालङ्कारो निबद्धः।)॥ ४॥ उदरं वर्णयति॥ प्रखरेति—प्रकर्षेण खरास्तीक्ष्णाः प्रखरास्तादृशा ये नखरा नखास्त एव वज्रास्तैरुत्खातं विदारितं तच्च तद्रूक्षं कठोरं तच्च तत् यदरिवक्षः। अरेः शत्रोर्हिरण्यकशिपोर्वक्षस्थलं तदेव शिखरी पर्वतस्तस्य शिखरं शृङ्गं तस्य रक्तानि रुधिराणि तैः।

**प्रखरनखरवज्रोत्खातरूक्षारिवक्षश्शिखरिशिखररक्तैराक्त-**
**सन्दोहदेह। सुवलिभशुभकुक्षे भद्रगम्भीरनाभे दह दह**
**नरसिंहासह्यवीर्याहितं मे॥ ५॥**

प्रखरनखरवज्रोत्खातरूक्षारिवक्षश्शिखरिशिखररक्तैः। आक्त उक्षितः सन्दोहदेहो मध्यदेहो यस्य सः तत्सम्बुद्धिः। आक्तसन्दोहदेह। शोभनाश्च ते वलयश्च ते चास्मिन् सन्तीति सुवलिभः। 'तुन्दिवलिवटेर्भ' इति मत्वर्थे भः। तादृशः शुभकुक्षिः शोभनोदरं

---

उपमानोपमेययोरभेदवर्णनाद् रूपकालंकारः। तेन यथा वज्रेण पर्वतशृंगं विदारितं तद्वद्धिरण्यकशिपुवक्षो नखेन विदारितमित्युपमालंकारो व्यज्यते। ख-र-क्षादिवर्णावृत्त्या वृत्त्यनुप्रासश्च॥ ५॥

यस्य सः तत्सम्बुद्धिः । सुवलिभशुभकुक्षे । भद्रः शोभनो गम्भीरनाभिरगाधनाभिर्यस्य सः तत्सम्बुद्धिः । भद्रगम्भीरनाभे । असह्यवीर्य नरसिंह मेऽहितं दह दहेत्यन्वयः ॥ (सुमतीन्द्रीयटीकायां—सन्दोहदेह इत्यत्र सन्दोहः कुक्ष्याद्यवयवसमुदायः । 'सन्दोहो वासुदेवकः । नारायणोऽथसन्दोहो वासुदेवः शिरोऽपि वा' इत्यत्राभियुक्तैस्सन्दोह-शब्दस्य मध्यदेहवाचित्वेन व्याख्यातत्वाद्देहशब्दवैय्यर्थ्यान्मध्यमात्रवाचित्वमभ्युपगम्य

स्फुरयति तव साक्षात्सैव नक्षत्रमाला क्षपितदितिजवक्षो
व्याप्तनक्षत्रमार्गम् । अरिदरधर जान्वासक्तहस्तद्वयाहो
दह दह नरसिंहासह्यवीर्याहितं मे ॥ ६ ॥

सन्दोहो मध्यदेह इति व्याख्येयम् । केचित्सुवलीनां भाकान्तिर्यस्य स सुवलिभः शुभः कुक्षिर्यस्य स इत्येकपदत्वेन व्याचक्षते ।) ॥ ५ ॥ वक्षो वर्णयति ॥ स्फुरयतीति—अरिश्चक्रं स च दरः शङ्खः स च तयोर्धरतीति धरस्तत्सम्बुद्धिः । अरिदरधर । जानुनो-र्जानुप्रदेशयोरासक्तं सम्बद्धं हस्तद्वयं यस्य सः तत्सम्बुद्धिः । जान्वासक्तहस्तद्वय ।

असह्यवीर्य नरसिंह । तव त्वत्सम्बन्धिनी साक्षात्प्रत्यक्षभूता । या नक्षत्रमाला नक्षत्राणां पङ्क्तिः । 'उरस्स्थलं ज्योतिरनीकमस्ये'ति भागवते विराट्पुरुषवर्णनेन नक्षत्रपङ्क्तीनां भगवदुरस्संस्थितत्वोक्तेः । तत्र साक्षान्नक्षत्रमालेत्युक्तम् । क्षपितो विनाशितो दितिजो दितिपुत्रो हिरण्यकशिपुस्तस्य यद्वक्षस्तेन व्याप्तो यो नक्षत्रमार्गान्तरिक्षप्रदेशस्तम् । क्षपितदितिजवक्षोव्याप्तनक्षत्रमार्गम् । स्फुरयति प्रकाशयति । स्फुर स्फुरणे इति धातोर्णिजन्ताल्लट् । अहो आश्चर्यम् । अतिस्थूलस्य हिरण्यकशिपोर्वक्षस्थलं नक्षत्रमार्गपर्यन्तं प्रवृद्धमभूत् । तेन च नक्षत्रमार्गनिरोधः कृतोऽभूत् । तस्मिन् दितिजे त्वया नाशिते सति प्रतिबन्धकाभावात् त्वद्वक्षस्सम्बन्धिनी नक्षत्रपङ्क्तिः स्पष्टा बभूवेति भावः । एतादृशस्त्वं मेऽहितं दह दहेत्यन्वयः ॥ (सुमतीन्द्रीयटीकायां—अराण्यस्य सन्तीत्यरि । धरतीति धरः पचाद्यच् । अरिदरयोर्धर इति 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । यद्वा—अरिदरौ धरतीत्युपमितसमासः । कर्मण्यण् । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिका' इत्यमरोक्तेः साक्षान्नक्षत्रमालैव नक्षत्रमाला सप्तविंशतिसंख्याकमुक्तामणिशालिनी । स्फुर स्फुरण इति धातोः कर्तरि इगुपधलक्षणः कः । ततस्तत्करोतीति णिः ।

स्फुरतेरेव तदुत्पादने स्फोरयतीति वा स्यात्। 'संज्ञापूर्वको विधिरनित्य' इति स्फुरयतीत्यत्र गुणाभाव इत्याहुः। अतिविपुलहिरण्यकशिपुवक्षःकवाटविपाटनेन तत्पिहित नक्षत्रमार्गप्रासादायिनी भगवद्वक्षस्थलासक्तमौक्तिकमालेत्युर उपवर्णितं भवति।) ॥ ६ ॥ हस्तवर्णनं करोति ॥ कटुविकटेति—कटवस्तीक्ष्णाः 'रसे कटुः कटुकार्ये त्रिषु मत्सर-

**कटुविकटसटौघोद्धट्टनाद् भ्रष्टभूयोघनपटलविशालाकाश-**
**लब्धावकाशम्। करपरिघविमर्दप्रोद्यमं ध्यायतस्ते दह दह**
**नरसिंहासह्यवीर्याहितं मे ॥ ७ ॥**

तीक्ष्णयोः' इत्यमरः। ताश्च ता विकटाः प्रसृताः। 'विशालं विकटं स्पष्ट'मिति हलः। ताश्च तास्सटाः केसराः केशाश्च तासामोघः समूहस्तस्योद्घट्टनमत्यन्तसङ्घट्टनं तस्मात् कटुविकटसटौघोद्घट्टनात्। भ्रष्टानि स्वस्थानाच्च्युतानि च तानि भूयांसि बहूनि च यानि घनपटलानि मेघमण्डलानि च। 'पटलं पेटलं चक्र'मिति हलः। तैर्विशालः

परिघाविवेत्यत्र उपमालंकारः। सटाचलनापनीतमेघवर्णनान्नृसिंहस्य भूम्याकाशव्याप्तदेहत्वं गम्यते ॥ ७ ॥

प्रतिरोधहीनत्वेन विस्तीर्णो य आकाशस्तस्मिन् लब्धोऽवकाशो येन सः। तं भ्रष्ट-भूयोघनपटलविशालाकाशलब्धावकाशम्। असह्यवीर्य नरसिंह तव। करौ परिघाविव परिघाख्यायुधविशेषाविव ताभ्यां विमर्दप्रोद्यमो युद्धाय प्रोद्यमः प्रकृष्टव्यापारस्तं करपरिघविमर्दप्रोद्यमम्। ध्यायतो ध्यानं कुर्वतः। मेऽहितं दह दहेत्यन्वयः। सटा-विधूता जलदास्तदापन्नि'ति भागवतोक्तरीत्या सटाविधूननेनाकाशमण्डलान्मेघसमूहे-

**हठलुठदलघिष्ठोत्कण्ठदष्टोष्ठविद्युत्सट शठकठिनोरःपीठभि-त्सुष्ठु निष्ठाम्। पठति नु तव कण्ठाधिष्ठघोरान्त्रमाला दह दह नरसिंहासह्यवीर्याहितं मे ॥ ८ ॥**

ष्वितस्ततो गतेषु युद्धे करपरिघव्यापारायावकाशो जायत इति भावः ॥ ७ ॥ कण्ठं वर्णयति ॥ हठेति—हठेन दुष्टनिग्रहे आग्रहबलेन 'हठो वारि विपण्यां च प्रसभे च' इति हलः। लुठन् चञ्चलः। लुठि गतावित्यस्माद्धातोः शतृप्रत्ययः। अलघिष्ठोत्कण्ठः लघिष्ठो लघुर्न भवतीत्यलघिष्ठः। अतिस्थूल इत्यर्थः। स चासावुत्कण्ठ उत्तमश्चासौ

कण्ठः कण्ठप्रदेशश्च उत्कण्ठः हठलुठन् अलघिष्ठोत्कण्ठो यस्य स तत्सम्बुद्धिः । हठलुठदलघिष्ठोत्कण्ठ । दष्टो दैत्येषु क्रोधवशात् दष्ट ओष्ठोऽधरोष्ठो येन सः तत्सम्बुद्धिः । दष्टोष्ठ । विद्युता समानाः सटा यस्य स तत्सम्बुद्धिः । विद्युत्सट । शठस्य कपटिनः हिरण्यकशिपोः । शठ कैतव इति धातोः । कठिनं दृढं यदुरस्तदेव पीठं तद्भिनत्तीति तथोक्तस्तत्सम्बुद्धिः । शठकठिनोरःपीठभित् । असह्यवीर्य नरसिंह । तव कण्ठमधितिष्ठतीति कण्ठाधिष्ठा । सा च सा घोरान्त्रमाला भयङ्करान्त्रस्रक् च । कण्ठाधिष्ठान्त्रमाला । सुष्ठु सम्यग् यथा भवति तथा निष्ठा युद्धासक्तिस्तां सुष्ठुनिष्ठाम् । युद्धविषयप्रवृत्तिं वा । 'निष्ठोत्कर्षव्यवस्थयोः । क्लेशनिष्पत्तिनाशेऽन्ते निर्वाणे याचके व्रते' इति हेमचन्द्रः । पठति नु व्यक्ततया वर्णयति किम् । पठ व्यक्तायां वाचीति धातोर्लट् । श्रीनृसिंहस्य उत्कृष्टकण्ठासक्तान्यान्त्राणि कण्ठस्य चलनकाले लुठन्ति किल । तेषां च लुठतां चटचटशब्दो जायते । तत्र कविरुत्प्रेक्षते तान्यान्त्राणि त्वदीयपराक्रमं स्तुवन्तीति ॥ (सुमतीन्द्रीयटीकायां—लुठ उपघाते लुठन् परावर्तमानः । उत्

---

विद्युत्सटेत्यत्र लुप्तोपमा । पठति नु इत्युत्प्रेक्षा चेत्यनयोस्तिलतण्डुलवत्संसृष्टिः ॥ ८ ॥

उन्नतः कण्ठो यस्य स तस्य सम्बुद्धिः। विद्युत इव सटा यस्य सः। 'सप्तम्युपमानपूर्वपदस्ये'ति बहुव्रीहिः। अधितिष्ठतीत्यधिष्ठा 'आतश्चोपसर्गे' इति कर्तरि कः। कण्ठस्याधिष्ठा कण्ठाधिष्ठा सा च सा घोरान्त्रमाला च। कठिनोरःपीठस्य भिद् भेदनं तस्मै भावे सम्पदादिलक्षणः क्विप्। सुष्ठुनिष्ठां निष्पत्तिं व्रतं वा। पठति नु।

हतबहुमिहिराभासह्यसंहाररंहो हुतवहबहुहेतिह्रेषिकानन्त-
हेति। अहितविहितमोहं संवहन् सैंहमास्यं दह दह नर-
सिंहासह्यवीर्याहितं मे ॥ ९ ॥

नु वितर्के। 'कृशांग्याः सन्तापं वदति नलिनीपत्रशयन'मित्यत्र वदतीतिवत् पठतिवेत्युत्प्रेक्षते।) ॥ ८ ॥ मुखं वर्णयति ॥ हतेति—हतबहुमिहिराभासह्यसंहाररंहः। हता प्रतिहता बहुमिहिराभा बहवो ये मिहिराः सूर्याः। 'मिहिरो विरोचनोऽर्के' इति हलः।

---

उपमेयस्य मुखस्य उपमानभूतसूर्याभ्याधिक्यवर्णनाद् 'व्यतिरेको विशेषश्चेदुपमानोपमेययो'रित्युक्तव्यतिरेकालंकारः वृत्त्यनुप्रासश्शब्दालंकारश्चेत्यनयोस्संसृष्टिः ॥ ९ ॥

तेषामाभा येन तत्। हतबहुमिहिराभम्। अत एवासह्यं सोढुमशक्यं संहाररंहस्संहारस्याडम्बरो यस्य तत्। असह्यसंहाररंहः। हतबहुमिहिराभं च तदसह्यसंहाररंहश्चेति कर्मधारयः। तत् हतबहुमिहिराभासह्यसंहाररंहः। हुतवहबहुहेतिहेपिकानन्तहेति। हुतवहानामग्नीनां बह्वयो या हेतयो दीप्तयः। 'हेतिर्ज्योतिर्दीप्ती रुचिः' इति हलः। तासां ह्रेषिकाः लज्जाप्रदा अनन्तहेतयोऽपरिमितदीप्तयो यस्मिन् तत् तथोक्तं तत् हुतवहबहुहेतिह्रेषिकानन्तहेति। अहितविहितमोहम्। अहितेषु शत्रुषु विहितः कृतो मोहो मौढ्यं येन तत्तथोक्तं तत् अहितविहितमोहम्। 'मोहो मूर्छा विपर्ययः' इति हेमचन्द्रः। सिंहस्य सम्बन्धि सैंहमास्यं मुखम्। संवहन् धारयन्। एतादृश नरसिंह। ममाहितं दह दहेति सम्बन्धः॥ (सुमतीन्द्रीयटीकायां—हृतबहुमिहिरेति पाठः। हृतास्तिरस्कृताः बहुमिहिराभा याभिस्ताश्च ताः। असह्यसंहारस्य जगत्संहारस्य रंहो यस्य स हुतवहस्तस्य बहुहेतयो ज्वालाः तासां ह्रेषिका लज्जां प्रापिताः 'ह्रीलज्जाया'मिति धातोः। प्रलयार्ककान्तीनां प्रलयानलज्वालानां तत्कालशेषमुखोद्गीर्णानलदीप्तीनां च तिरस्कारिका भगवन्मुखोत्थहेतिरित्युक्तं भवति। केचिद्धुतवहबहुहेतिह्रेषिकानन्तहेतीति

